
SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:8, Issue: 5
August - 2021, Price Rs.5/-


तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका

आगस्ट् २०२१....रू.५/-

पालयाच्युत! पालयाजित!
पालय! कमलालय!
लीलया धृतभूधराम्बुरुहोदर! स्वजनोदर!

SIVAPRASAD



क्षीराब्धिकन्यककु
श्रीमहालक्ष्मिकिनि
नीरजालयमुनकु
नीराजनम्।

- अन्नमय्य

## गीतामृतम्



सञ्जय उवाच-

तत्रापश्यत्स्थितान् पार्थः पितृनथ पितामहान्।
आचार्यान् मातुलान् भ्रातृन् पुत्रान् पौत्रान् सखींस्तथा।
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि।।

(भगवद्गीता २६/१)

श्रीकृष्णवचनश्रवणसमनन्तरं कुरुसेनायां स्थितान् भूरिश्रवप्रमुखान्, पितामहान् भीष्मादीन्, आचार्यान् द्रोणादीन्, मातुलान् शल्यादीन्, भ्रातृन् सुयोधनादीन्, पुत्रान् दुर्योधनादीनां पुत्रान् लक्ष्मणादीन्, पौत्रान्, मित्राणि कृतवर्मादीन्, श्वशुरान्, कृतोपकारान् सुहृदः च एतादृशभावनयैव सेनयोरुभयोरपि अपश्यत् अयमर्जुनः इति सञ्जयः धृतराष्ट्रमुवाच।

## सङ्कीर्तनम्



भावयामि गोपालबालं मनः
सेवितं तत्पदं चिन्तयेऽहं सदा ।। प।।

कटिघटितमेखलाखचितमणिघण्टिका-
पटलनिनदेनविभ्राजमानम्।
कुटिलपदघटितसङ्कुलशिञ्जितेनतं
चटुलनटनासमुज्ज्वलविलासम्।।च।।

निरतकरकलितनवनीतं ब्रह्मादि -
सुरनिकरभावनाशोभितपदम्।
तिरुवेङ्कटाचलस्थितमनुपमं हरिम्
परमपुरुषं गोपालबालम्।।च।।

(अन्नमाचार्यसङ्कीर्तनम्)

संपादकीयम्

# सनातनसंस्कृत्यां मन्दिरवैशिष्ट्यम्

अस्माकं हैन्दवसंस्कृत्यां मन्दिराणां विशिष्टं स्थानं वर्तते। 'मन्दिरं अलायः' इत्यादिरूपेण व्यवह्रियमाणे पूजास्थाने क्रियामाणानि कैङ्कर्यकार्याणि सर्वेषां मानवानां कल्याणाय तथा वृद्ध्यर्थं च भवन्ति इत्यत्र नास्ति संशयः।

देशविदेशेषु अनेकानि अत्यन्तं महिमान्वितानि विशिष्टानि मन्दिराणि सन्ति। शिवस्य, विष्णोः, लक्ष्मीदेव्याः, गणपतेः इत्यादिविभिन्नदेवतानां आलयाः सन्ति यत्र विभिन्नरूपेण उपासना अपि दृश्यते। तथापि सर्वेषामपि मन्दिराणाम् एकम् एव उद्देश्यं वर्तते यत् विश्वमानवानां अभिवृद्धिर्भवतु इति।

मन्दिराणां निर्माणं शिल्पशास्त्रानुसारं क्रियते। वेदैः शास्त्रैः च साकं देश-काल-गति-परिस्थित्यादिप्रतीकानां केन्द्रबिन्दुरिव भवति मन्दिरम्। एवं चरित्रस्य तथा इतिहासस्य च प्रतीकत्वेन अनेकानि मन्दिराणि अस्माकं देशे वर्तन्ते परिलक्ष्यन्ते च।

वेद-शास्त्र-धर्मादिपालने इव मन्दिरगमनागमनेऽपि भक्तैः केचन नियमाः परिपालनीयाः। मानसिकशुद्धिः तथा शारीरिकशुद्धिः उभयमपि मन्दिरगमनाय अपेक्षते। स्नात्वा शुभवस्त्रं धृत्वा मङ्गलस्वरूपो भूत्वा मन्दिरगमनमुचितम्। मन्दिरस्य परिक्रमणं, तीर्थसेवनं, प्रसादसेवनं, घण्टानादश्रवणं, मन्दिरे प्रवृत्तेषु प्रवर्तमानेषु विविधेषु यज्ञयागादिकार्यक्रमेषु भागग्रहणं, भक्तिगीतादीनां आलापनम्, अन्नदानं, दान-धर्मादीनाम् आचरणम्, दीपप्रज्वालनम् इत्यादीनां मन्दिरसम्बद्धकार्यणिाम् अनुष्ठानेन सकारात्मकशक्तेः वृद्धिः भवति। तेन च सर्वोऽपि जनः सत्त्विको भवितुमर्हति।

केषुचन आलयेषु निम्ब-पिप्पल-अश्वत्थ-शमी-तुलसीत्यादिवृक्षाणां पूजनमपि दृश्यते। तस्य पृष्ठतः विज्ञानयुक्तस्वास्थ्यस्य रहस्यमपि वर्तते। तथैव गोमातुः सेवापूजनादिनं जीवजन्तूनां कृते प्रकटमानः दयाप्रतीकः भवति।

अस्माकं हैन्दवसंस्कृत्यां भक्त्या साकं महोत्कृष्टभावना-पूजा-कैङ्कर्यविषयाणां पृष्ठभूमित्वेन अनेकानि रहस्यानि सन्ति। अस्य सर्वस्य स्थापनाय रक्षणाय च तिरुमलतिरुपतिदेवस्थानेन अनेकपुरातनमन्दिराणां वैभवं पुनरानीतम्। एवमेव बहुत्र नवीनालयानां निर्माणमपि आरब्धम्। भगवतः भक्तितत्त्वस्य विश्वव्यापनाय सर्वत्र श्रीमद्वेङ्कटेश्वरस्य मन्दिरनिर्माणमपि ति.ति.दे. पक्षतः प्रारब्धम् स्वायत्ततया।

अतः इमं मुदावहं विषयं ज्ञात्वा वयमपि हस्तं संयोज्य आर्तत्राणपरायणस्य भक्तवत्सलस्य भगवतः श्रीश्रीनिवासस्य आराधनेन अस्माकं सर्वाः अपि मनोकामनाः परिपूर्णतया सफलीकुर्मः। भगवदनुग्रहपात्रभूताः भवेम।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०५

# आगस्ट् २०२१

श्री प्लवनामसंवत्सरस्य आषाढकृष्ण-अष्टमी तः
प्लवनामसंवत्सरस्य श्रावणकृष्णनवमीपर्यन्तम् - १९४१




मुखचित्रम् - श्रीनवनीतकृष्णस्य उत्सवविग्रहः, तिरुमल

अन्तिमरक्षापुटः - श्रीहयग्रीवस्वामिनः चित्रम्


गौरवसम्पादकः:-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः,
ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


**सूचना**

मुद्रितलेखानां विचाराः लेखकानामेव ।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*


## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org


एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# श्रीक्षेत्रे श्रीजगन्नाथरथोत्सवः

- डॉ. सोमनाथदाशः

चरवाणी - ८२४७६७८५४८

एवं नेत्रोत्सवदिवसस्य रात्रिकृत्यं समाप्य द्वितीयातिथेः प्रातः ब्राह्ममुहूर्त्ते उत्थाय देवानां स्नानकार्यं सम्पाद्यते। ततः प्रातः पूजनम्, मङ्गलारोपणम्, वन्दापनम्, अन्यत्पूजोपचारादिकं विधाय श्रीविग्रहाणां पदहुण्डनं (''पहण्डि'' इति लोकभाषायाम्) कारयित्वा द्वाविंशतिसोपानानि अतिक्रम्य सिंहद्वारदेशेन स्यन्दनानि प्रति आनीयन्ते। वेदघोषैः आदौ ब्रह्मा पुरतो व्रजति। ततः विश्वावसुकुलोद्भवाः विद्यापतिवंशजाः सर्वेऽपि सेवकाः आःकारशब्दान् कृत्वा हृष्टमानसाः विग्रहान् आनयन्ति। चतुर्षु विग्रहेषु सीरपाणिः, श्रीबलभद्रः, सर्वादौ आगच्छति। तत्पश्चात् भगिनी सुभद्रा, ततः देवदेवः श्रीजगन्नाथः, अन्ते च सुदर्शनः स्यन्दनं प्रति व्रजन्ति। छत्र-काहल-मृदङ्ग-घण्ट-घण्टावाद्यैः डिण्डिमनादैः महोत्सवोऽयं महताऽऽडम्बरेण परिपाल्यते। उच्यते च वामदेवसंहितायाम् -

**वेदघोषादिकं ब्रह्मा...कृत्वा महोत्सवम्।।**

- वा.सं.-१६/१-१२

नीलाद्रिमहोदये तु पदहुण्डनस्य क्रम इत्थं वर्तते - **सुदर्शनं पुरस्कृत्य....सुरेश्वरम्।।** इति।

- पुरुषोत्तमषोडशी-१३-१४

श्रीविग्रहाणां पदहुण्डनदृश्यमिदमतीव लोभनीयं शोभनीयं चित्ताकर्षकं भवति। विविधेभ्यः देशेभ्यः समागतानां भक्तानां हृदयेषु गद्गदभावः समुपजायते। अन्तःकरणे अपूर्वं शीहरणं सृज्यते। आन्ध्रकवयः श्रीश्रीनिधिस्वामिनः रथयात्रायाः अपूर्वं दृश्यमिदं दृष्ट्वा सभक्तिकं लिखन्ति -

**रथैस्त्रिभिरलङ्कृतामतिविशालमध्यावनिं..... भगवान्।।**

- वा.सं.- १६/१७

पदहुण्डनावसरे श्रीविग्रहाणामुपरि कोऽपि अलङ्कारो न भवति। केवलं केतक्यादिपुष्पैस्सुसज्जितं मुकुटमेव ('टाहिया'' इति लोकभाषायाम्) दोलायमानं दृश्यते। अस्य किरीटस्य निर्माणं पुरीस्थराघवदासमठस्य विशिष्टाः शिल्पिनः कुर्वन्ति। अस्याकारः ताम्बूलपत्रसदृशो भवति। यथाविधि विग्रहाः रथसमीपं समानीय शनैः शनैः रथानां प्रदक्षिणं कारयित्वा काष्ठमयसोपानमाध्यमेन स्वस्वरथेषु संस्थाप्यन्ते। अपूर्वमिदं रथारोहणदृश्यं वामदेवसंहितायामित्थं वर्ण्यते-

**मेरुं समालिङ्गति....स्यन्दनसङ्गते च।।-**

वा.सं.-१६/२०-२२

स्यन्दनारोहणादनन्तरं तत्र नैके पूजोपचाराः विधीयन्ते। तत्र प्रसिद्धासु नीतिषु पुरीस्थितगोवर्द्धनपीठस्य श्रीश्रीशङ्कराचार्याणां श्रीविग्रहदर्शनार्थं रथोपरि समागमः, गजपतिमहाराजस्य रथसम्मार्जनञ्च (''छेरापहँरा'' इति लोकभाषायाम्) प्रमुखं नीतिद्वयं भवति। एतादृशी रथमार्जनपरम्परा ऐतिहासिकमतानुसारेण उत्कलस्य सूर्यवंशीयगजपतिमहाराजेन कपिलेन्द्रदेवेन प्रारब्धाऽऽसीत्। रथे सारथिप्रतिष्ठा क्रियते। अश्वाः रथरज्जवश्च संयोज्यन्ते। प्रतिरथं चत्वारः रज्जवः बध्यन्ते। ततः असंख्येयाः भक्तप्रवराः रथाकर्षणं कृत्वा श्रीगुण्डिचामन्दिरं प्रति नयन्ति। सर्वादौ महाप्रभोः श्रीबलभद्रस्य स्यन्दनं, ततः परं सुभद्रायाः, अन्ते च

श्रीजगन्नाथदेवस्य नन्दिघोषरथं पुरीस्थिते बृहन्मार्गे (''बडदाण्ड'' इति लोकभाषायाम्) समाकर्ष्यन्ते। हरिनामसङ्कीर्तनम्, ''हुलहुलि'' शब्दः, 'गोटिपुअ'' ''ओडिशी'' इत्यादिनृत्यम्, विविधव्यायामशालानां क्रीडाविदं। व्यायामकौशलप्रदर्शनम्, स्थले स्थले पङ्क्तिभोगसमर्पणम्, नारिकेलभञ्जनम् इत्यादयः रथयात्रायाः आकर्षणीयविषया भवन्ति। पङ्क्तिभोगः विशिष्टरीत्या श्रीगजपतिमहाराजस्य राजप्रासादं पुरतः, श्रीमन्दिरप्रशासनभवनाग्रे तथा च मध्येमार्गं विराजमानस्य श्रीजगन्नाथमातृभगिनीमन्दिरस्य अग्रे क्रियते। श्रीजगन्नाथस्य मातृभगिनी (''माउसी मा'' इति लोकभाषायाम्) तस्मै ज्वलत्पिष्टकं (''पोडपिठा'' इति लोकभाषायाम्) ददति। तच्च अतीव मधुरं भवति। एवं पङ्क्तिभोगैः रथम् अग्रे सरति। एवं रथस्थान् देवान् यो मनुष्यः पश्यति तस्य जीवनं सार्थकं जायते।

उच्यते च यात्राभागवते -

**रथस्थं च .... धन्या भुवनत्रये।।**

- यात्राभागवते - पञ्चमाध्यायः

प्रतिरथं श्रीमन्दिरारक्षिकर्मचारी (''वरकन्दाज'' इति लोकभाषायाम्) रक्तवर्णपताकासङ्केतद्वारा भक्तान् रथकर्षणे मार्गदर्शनं कृत्वा रथं नियन्त्रयति। रथत्रयं यथाकालं श्रीगुण्डिचामन्दिरं प्राप्नोति।

ततः पुनः विधिपूर्वकं एकपदहुण्डनक्रियया (''गोटिपहण्डि'' इति लोकभाषायाम्) श्रीविग्रहाः गुण्डिचानिलयं नीयन्ते। तत्र नव दिवानि स्थित्वा पुनः सर्वेऽपि देवाः स्यन्दनारूढाः श्रीमन्दिरं प्रति समानीयन्ते। एवं रथयात्रायाः प्रमुखतया अष्टौ अङ्गानि भवन्ति। यथा - स्नानोत्सवः, अनवसरगृहप्रवेशः, नेत्रोत्सवः, श्रीगुण्डिचायात्रा, हेरापञ्चमी, आडपपर्व, प्रत्यावर्तनयात्रा (''वाहुडायात्रा'' इति लोकभाषायाम्), नीलाद्रिशिखरारोहणम् (''नीलाद्रिविजे'' इति प्रान्तीयभाषायाम्), च। कदाचित् रथयात्रापरम्परेयं पञ्चसु भागेषु विभज्यते। यथा - अन्तर्वेदी, महावेदी, महोत्सवः, आडपोत्सवः, दक्षिणामुख्युत्सवः, नीलाद्रिशिखरारोहणञ्च। अतः अयं ''गुण्डिचापञ्चकम्'' नाम्नाऽपि अभिधीयते।

''हेरापञ्चमी'' रथयात्रायाः पञ्चमे दिवसे आषाढशुक्लषष्ठीतिथौ परिपाल्यते। अस्योत्सवस्य विषये एका लोककथा श्रूयते यत्, श्रीजगन्नाथस्य विरहव्यथया पीडिता श्रीलक्ष्मीदेवी विमलादेव्याः प्रचोदनेन गुण्डिचामन्दिरं गत्वा एकान्ते श्रीजगन्नाथेन साकं गुप्तमिलनं करोति। अभिमानेन सा श्रीजगन्नाथस्य स्यन्दनभङ्गं करोतीति परम्परा प्रचलति। सेवकैः समायोजितेयं परम्परा यात्राभागवते इत्थं प्रतिपाद्यते -

''ततो गुण्डिचायात्रामारभ्य पञ्चमदिवसे हेरापञ्चमी भवति। श्रीगुण्डिचामारभ्य पञ्चमदिवसे विमानोपरि श्रीमहालक्ष्मीं गृहीत्वा गुण्डिचामन्दिरसन्निहितरथसमीपं नयेत्। ततो जनान् प्रेषयित्वा जगन्नाथदेवस्य सेवकानानयेत्। तेषां लक्ष्मीसमीपे तत्र दासीसयोरुक्तिप्रत्युक्तिः भवति। ततो महालक्ष्मीः जगन्नाथदेवस्य समीपं गत्वा जगन्मोहनस्य जयविजयद्वारदेशे देवस्य सम्मुखे तिष्ठेत्। ततो देवस्य कर्पूरारात्रिकमङ्गलारात्रिकसप्तवर्तिकारत्रिकानि कुर्यात्। एतदारात्रिकं लक्ष्मीजगन्नाथोभयोद्देशेन कृत्वा दूर्वाक्षतैर्देवं देवीं च वन्दापयेत्। ततो जगन्नाथदेवस्य प्रसादमाल्यं लक्ष्म्यै दद्यात्। ततो लक्ष्मीः कर्पूरचन्दनमोहनचूर्णं गृहीत्वा देवस्योपरि प्रक्षिपेत्। ततः स्वगृहं प्रति देवीमानयेत्। लक्ष्मीं स्वस्थाने प्रवेशयेत्। इति हेरायात्रा।'' (तत्रैव-१६/५२)

पवित्रघोषयात्रासमये श्रीगुण्डिचामन्दिरे श्रीविग्रहाणां सप्ताहं यावत् यत्र अवस्थानं भवति, तत्स्थानम् लोके ''आडपमण्डपम्'' इति कथ्यते। पुराणानुसारेण स्थलमिदं ''यज्ञवेदी'', ''महावेदी'' इति उल्लिख्यते। यथा -

**यज्ञवेदिरियं विष्णो....मण्डपोत्तमे।।**

- (यात्राभागवते- पञ्चमाध्याये)

अपि च -

**महावेदीं ततो...दारुब्रह्मस्वरूपिणम्।।**

- नी.म. - १६/७३,७५

इत्यादिः। एवमाडपमण्डपे महावेद्यां यज्ञवेद्यां वा यः मनुष्य इन्द्रद्युम्नपुष्करिण्यां स्नानं कृत्वा श्रीजगन्नाथबलभद्रसुभद्राणां विग्रहदर्शनं करोति, सः सहस्रवाजपेययागस्य, सहस्राश्वमेधयागस्य च फलं लभते इति शास्त्रेषु उच्यते। यथा - **महावेद्यां नरो...प्राप्नोति मानवः।।**

- स्कन्दपुराणे अ.३४

त्रिषु कालेषु यद्यपि दर्शनस्य प्राशस्त्यमुच्यते, तथापि

सन्ध्याकाले रात्रौ च विग्रहाणां दर्शनेन महापुण्यं लभ्यते इति पुराणेषु शास्त्रेषु च स्पष्टतया उल्लेखः वर्तते। यथा -

दिवा तद्दर्शनं ...प्राकृतमानुषी।।

- वा.सं.-१७/१०-११

अपि च वामदेवसंहितायामपि सन्ध्याकाले भगवद्दर्शनस्य माहात्म्यविषये इत्थं सूच्यते -

अत्र स्थले ....न संशयः।।

- या.भा. -अ.५

अत्र विशिष्टतया नवमदिवसे ''सन्ध्यादर्शनम्'' इति नाम्ना विशिष्टायोजनं क्रियते। अस्मिन् काले भक्ताः श्रीगुण्डिचामन्दिरं गत्वा श्रीविग्रहाणां दर्शनं कुर्वन्ति। तत्र दीपानि प्रज्वालयन्ति। ब्राह्मणानां कृते महाप्रसादसेवनं कारयित्वा सन्तोषयन्ति। स्वयमपि महाप्रसादसेवनम् ( ''अभडा'' इति लोकभाषायाम्) कुर्वन्ति।

ततः परं प्रत्यावर्तनयात्रा (''बाहुडा'' यात्रा इति लोको) परिपाल्यते। उच्यते च यात्राभागवते -

नवमेऽह्नि गुण्डिचायाः... संशयः।।

- तत्रैव

स्यन्दनानि दक्षिणपार्श्वे नीत्वा संस्थाप्यन्ते। तदानीं श्रीविग्रहाणां रथपरिक्रमादिकं न भवति। रथमध्ये सुवेशसम्पादनादनन्तरं मङ्गलारत्रिकं भवति। पूर्वविध्यनुगुणं रथमार्जनं, चन्दनोदकेन रथावसेचनम्, चन्दनचूर्णनिक्षेपणम्, नृपाय शाटिकाप्रदानञ्च कृत्वा स्यन्दनानि श्रीमन्दिराभिमुखं गच्छन्ति। रथे किञ्चिद् दूरे गते ततो लक्ष्मीनारायणसाक्षात्कारोत्सवः परिपाल्यते। शिबिकायां महालक्ष्मीं संस्थाप्य रथसमीपं नीत्वा देवस्याग्रे संस्थाप्यते। उभयोर्मेलनादनन्तरं सर्वाण्यपि स्यन्दनानि श्रीमन्दिरस्य सिंहद्वारे गरुडस्तम्भस्य समीपे संस्थाप्यन्ते।

आषाढमासस्य शुक्लपक्षेऽस्मिन् बृहदेकादशीतिथौ रथोपरि विराजमानानां श्रीविग्रहाणां स्वर्णवेशः कार्यते। स्वर्णनिर्मितहस्तपादादिभिः इमे भक्तानां पुरत आविर्भूता भवन्ति। स्वर्णवेशे व्यवहृतानामलङ्काराणां सूची एवमस्ति। यथा -- श्रीहस्तः (Golden Hand) श्रीपयरः (Golden Feet) श्रीमुकुटम् (Golden big Crown) श्रीमयूरचन्द्रिका (A Golden Peacock Feather)

श्रीचूलपतिः ( A Golden ornament worn traditionally on the forehead to increase the beauty of the face) श्रीकुण्डलम् (Golden earring) श्रीराहुरेखा (A half square shaped golden aura around the face of the deities) श्रीमाला (Necklace with several designs made of gold) (एषा माला सेवती अगस्ति-कदम्ब-कण्टि-मयूर-चम्पकादियुक्ता भवति), श्रीचिता (An ornament representing the third eye of the Lord) श्रीचक्रम् (Golden Wheel) श्रीगादा (Golden Bludgeon) श्रीपद्मम् (Golden Lotus) श्रीशङ्खः (Golden Conch) इत्यादि।

स्वर्णवेशतिथेः परस्मिन् दिने द्वादशीतिथौ ''अधरप्रपानकम्'' (''अधरपणा'' इति लोके) नाम प्रपानकभोगः नव (९) मृण्मयपात्रेषु संस्थाप्य देवानां कृते समर्प्यते।

ततोऽग्रे ''नीलाद्रिशिखरारोहणम्'' नाम्न्यां प्रक्रियायाम् एकपहण्डिमाध्यमेन (गोटिपहण्डीति लोके) श्रीजगन्नाथमन्दिरप्रवेशसमये श्रीजगन्नाथ-लक्ष्मीदेव्योः कलहात्मिका काऽपि अपूर्वा परम्परा समायोज्यते। देवस्य द्वारदेशप्राप्तौ अभ्यन्तरगतायाः लक्ष्मीदेव्याः बहिः स्थितस्य जगन्नाथस्य च उक्तिप्रत्युक्तिश्चलति। ततः श्रीलक्ष्मीदेवी कपाटोन्मोचनं करोति। श्रीजगन्नाथो रत्नवेदिकां पुनः समलङ्करोति।

एषा भवति भूस्वर्गरूपेणाभिहितस्य ओडिसाराज्यस्य पुरीक्षेत्रस्य नीलाचलधाम्नः वैकुण्ठविहारिमहाप्रभुश्रीजगन्नाथस्य रथयात्रा परम्परा। यो मानवः प्रत्यक्षतया रथयात्रायां भागं गृह्णाति, स्यन्दनेषु श्रीविग्रहान् पश्यति तस्य जीवनं सार्थकं जायते, सः मुक्तिमार्गेण गत्वा ब्रह्मलोके महीयते। श्रीमन्दिरे विराजमानः श्रीजगन्नाथः सर्वेषामभीष्टफलदो भवति। प्रेमानन्दैकपूर्णोऽसौ भक्तानन्दप्रदायको भवति। अतः तत्स्थानं वृन्दावनमिव भाति नितराम्। अस्य स्थानस्य प्रशंसा तथा भगवद्भक्तिपूर्णा स्तुतिः नित्याचारप्रदीपे एवं दृश्यते -

शाशबिस्सकलाभिरुक्तमहिमा .... कोऽप्येष कल्पद्रुमः।।

१- नित्याचारप्रदीपः

।।जय जगन्नाथ।।





# श्रीकृष्णजन्म

- श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

श्रीमद्भागवते श्रीकृष्णपरमात्मनः विस्तृतकथा श्रूयते। श्रीशुकाचार्यः सोमसूर्यकुलविस्तारचरित्रं, वामन-राम-नरसिंहेत्यादिभगवदवतारमहिमाः उक्त्वा तदनु वृष्टिवंशप्रदीपस्य भगवतः श्रीकृष्णपरमात्मनः पुण्यां कथां, यः श्रीहरिः त्वां स्वीयमातृगर्भे धृत्वा द्रौणिबाणात् भीत्या आगतायां सत्यां गर्भे स्थित्वा अरक्षयत्, कुरुकुलबीजं त्वां अश्वत्थामस्य अस्त्रात् यः अरक्षयत्, तस्य देवदेवोत्तमस्य जन्मवृत्तान्तं सर्वमपि परीक्षितः जिज्ञासानुसारं निरूपयति।

तद्यथा- समस्तजगति दुर्जनाः अधिका इत्यतः अधर्मभारेण खिन्ना आसीत् भूः। स्वीयदुःखं तत्कारणञ्च ब्रह्माणमब्रवीत्। तदा ब्रह्मा धर्णसंरक्षणाय समस्तदेवताभिः साकं क्षीरसागरं गतः। श्रीमन्नारायणः शेषशायी सर्वज्ञः भूलोकानर्थान् ज्ञात्वा 'दुष्टशिक्षार्थं सर्वाः अपि भूमाववतरन्तु' इति आदिश्य 'स्वयमपि अवतरामीति' ताभ्यः अभयमदात्।

**कंसस्य अशरीरवाणिः -** एकदा शूरपुत्रः वसुदेवः कंसस्य अनुजायाः देवक्याः करकमलमग्रहीत्। ततः निर्गमने कंसः स्वानुजासन्तुष्ट्यै स्वयं सारथिरभवत्। सोत्साहेन नीयमानस्य तस्य आकाशवाणिः श्रूयते।

यथा -

**पथि प्रग्रहिणं कंसं आभाष्याहाशरीरवाक्।**
**अस्यास्त्वामष्टमो गर्भो हन्ता यां नयसेऽबुध॥इति ॥**
(१०-१-२४)

भो मूढ! अनुजामोहेन बद्धोऽसि। तस्या अष्टमो गर्भः एव ते मृत्युहेतुः भविता इति अन्तरिक्षवाणि-श्रवणसमनन्तरमेव क्षणमप्यनवरुद्धः कंसः सरभसं खड्ग गृहीत्वा देवकीं मारितुं सन्नद्धो अभवत्। स्वजीवनस्य अधिकारस्य च भङ्गविषयकवार्तां श्रुत्वा अनालोचनेन स्वानुजावधाय सन्नद्धं कंसं अनेकविधं प्रार्थयन् वसुदेवः -

**ज्योतिर्यथैवोदकपार्थिवेश्वदः**
**समीरवेगानुगतं विभाव्यते।**
**विमं स्वयारचितेष्वसौ पुमान्**
**गुणेषु रामानुगतो विमुह्यति॥**

मृत्युविषयकश्रवणे सा वाणिः हिंसा, क्रौर्यं, स्वार्थं अहङ्कारादिदुर्गुणान् विहाय सन्मार्गगमनं सूचयति इत्यादिरूपेण उपदिशति। किन्तु दुश्चर्ये निश्चलः कंसः। अन्यमार्गमविजानन् वसुदेवः ''जनितान् सर्वान् शिशून् तुभ्यमर्पयामि'' इति ब्रवीति।

कालक्रमे देवक्यां जनितं शिशुं कंसाय ददाति चेदपि अष्टमशिशुः खलु मे मृत्युः इति विचिन्त्य शिशुं न हन्ति कंसः। किन्तु नारदोऽपि आगत्य गोकुले सर्वे देवा अवतीर्य भवद्दमनाय निश्चिता इति दैवसङ्कल्पं यदा अब्रवीत् तदा अनिश्चितमनस्कः सन् वसुदेवदेवकी कारगृहे बन्धितवान्। तयोः एकैकं शिशुमपि अत्यन्तं क्रूरः सन् हत्वा करालकृत्यं प्रादर्शयत्।

**श्रीकृष्णप्रादुर्भावः -**

कंसः वसुदेवस्य षट्पुत्रानहनत्। सप्तमगर्भः नष्टोऽपि अभूत्। भूमातुः प्रार्थनानुगुणं प्राचीदिशि सकलजनमनस्तोषकः आह्लादजनकः पूर्णिमाचन्द्रमा इव सर्वप्राणिहृदयाह्लादकारकः जगन्मङ्गलविग्रहरूपी भगवान् देवकीगर्भात् स्वयं प्रकटितोऽभूत्।

तदुक्तं -

**ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी।**
**दधार सर्वात्मकमात्मभूतं काष्टा यथानन्दकरं नभस्तः।।**

तदा गर्भस्थं भगवन्तं विशेषतया ब्रह्मादयो देवाः स्तुवन्ति।

यथा- **सत्यव्रतं सत्यपरं त्रिसत्यम्**
**सत्यस्य योनिं निहितं च सत्ये।**
**सत्यस्य सत्यमुत सत्यनेत्रम्**
**सत्यात्मकं त्वां शरणं प्रपन्नाः।।**
**एकायनोऽसौ द्विफलस्त्रिमूलः**
**चतूरसः पञ्चशिफः षडात्मा।**
**सप्तत्वगष्टविटपो नवाक्षो**
**दशच्छदी द्विखगो ह्यादिवृक्षः।।** इति।।

तदनन्तरं परमशोभायमाने मुहूर्त्ते कृष्णपक्षस्य अष्टमीतिथौ मध्यरात्रौ रोहिणीनक्षत्रे देवदेवोत्तमः भगवान् समस्तजगदज्ञाननाशकः कमलनयनः, शङ्खचक्रगदापद्मधारी, श्रीवत्साङ्कितः, कौस्तुभधारी, पीताम्बरः, नीलमेघश्यामः, वज्रवैढूर्ययुतकिरीटी, अमितकान्तियुतकेशः, उत्तमबाहुः, कङ्कणाद्याभरणयुतः शिशुः सन् प्रादुर्बभूव। लोके यः कोऽपि एवं न जायते।

अतः सः लोकातीतः इति ज्ञापनमेव तस्योद्देश्यम् इव अवतारक्षणे एव श्रीकृष्णस्य लीलाविग्रहं सहस्रनयनानन्दसागरः सन् स्वशिशुं अपश्यत् वसुदेवः। न केवलं वसुदेवः अपि तु चतुर्दशभुवनानि अपि आनन्दसागरसन्तुलितानि।

### श्रीकृष्णस्य प्रथमसन्देशः

प्रकटितः विष्णुः पितरौ प्रति विशेषानुग्रहं कृत्वा वसुदेवस्य अग्रिमकार्यमपि संसूच्य बालरूपं प्राप।

भगवदादेशेन वसुदेवः नन्दगोकुलं नेतुं कृष्णं करकमलयोः स्वीकृत्य पदं मन्दं चरति। तदा कारागृहस्य बृहदाकाराय:शृङ्खलाः बन्धकाः च भिन्ना अभूवुः। सूर्ये आगते सत्यन्धकारवत् कृष्णे आगते बन्धनानि सहजतया निर्गच्छन्ति। मन्दं मन्दं मेघनादसमन्विता वृष्टिः आरब्धा। तत्र शेषः अहितुण्डिकेन कृष्णम् आच्छाद्य अनुचरति।

वसुदेवः वासुदेवं धृतवानित्यतः 'यमुना' अपि मार्गम् अदात्। एवं गत्वा नन्दगोपस्य गृहे शिशुं यशोदागर्भाम्बुधौ संस्थाप्य तत्रस्थां दुर्गाम् अनयत्।

परेद्यवि प्रातःकाले शिशुजननवाचं श्रुत्वा कंसः मृत्युना खिन्नः सन् देवकीं प्रत्यगच्छत्। तत्र दीना देवकी इममेकं शिशुं वा रक्षितुं प्रार्थयति। तथापि यर्हि करुणालेशहीनः कंसः वन्यमृगवत् शिशुम् अग्रहीत् तर्हि सा दुर्गा गगनमण्डलम् आरूढा धनुर्बाणादिग्राहिणी अष्टभुजा सती "हे मूढ! तव मृत्युः अन्यत्र अजायत। मम संहारेण न कोऽपि लाभस्तव। दीनान् वृथा मा हिंस्यात्" इति उक्ते सति गेहे गेहे विद्यमानान् सर्वान् शिशून् हन्तुम् आदिदेश किरातकः स कंसः युक्तायुक्तविवेकहीनः।

तत्र नन्दगोकुले यशोदानन्दगोपौ शय्यायां शयानं बालं दृष्ट्वा तौ तत्रस्थजनाश्च श्रीकृष्णजन्मोत्सवं सवैभवं चक्रुः।

तदनु पूतना-तृणावर्त-शकटाद्यसुरवधादिना दुष्टशिक्षणमारभ्य, बाल्यलीलाः प्रदर्श्य, गोपकुलं परिरक्ष्य, महाभारतयुद्धे मुख्यपात्रं निर्वाह्य लोककल्याणं कृतवान् अयं लोकविलक्षणः महामहिमः इति।

### अर्घ्यप्रदानम् -

अस्मिन् "श्रीकृष्णजन्माष्टमी" सन्दर्भे उपवासेन चन्द्रोदयकाले कृष्णाय अर्घ्यं दद्यात् -

**जातः कंसवधार्याय भूभारहरणाय च।**
**कौरवाणां विनाशाय दैत्यानां निधनाय च।।**
**पाण्डवानां हितार्थाय धर्मसंस्थापनाय च।**
**गृहाणार्घ्यं मया दत्तं देवक्या सहितो हरे।।** इति।

षोडशोपचारादिना च सम्पूज्य नैवेद्यं स्वीकर्तव्यमिति सम्प्रदायः।

एतादृशकृष्णः केवलं स्मरणेनैव वः हृदये आविर्भूय अन्धकारभूयिष्टं मनः सान्त्वयतु अन्धकारशृङ्खलापनोदनेन। दयादिसद्गुणसम्पन्नानपि भावयतु इति श्रीकृष्णं संप्रार्थ्य विरमामि।

**यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर्विजयो भूतिः ध्रुवानीति मतिर्मम।।**





सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः।



# श्रीसङ्कष्टनाशनगणेशस्तोत्रम्

## नारद उवाच

प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम्।
भक्तावासं स्मरेन्नित्यमायुष्कामार्थसिद्धये ॥१॥

प्रथमं वक्रतुण्डं च एकदन्तं द्वितीयकम्।
तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥२॥

लम्बोदरं पञ्चमं च षष्ठं विकटमेव च।
सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥३॥

नवमं फालचन्द्रं च दशमं तु विनायकम्।
एकादशं गणपतिं द्वादशं तु गजाननम् ॥४॥

द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः।
न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ॥५॥

विद्यार्थी लभते विद्यां धनार्थी लभते धनम्।
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥६॥

जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत्।
संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥७॥

अष्टानां ब्राह्मणानां च लिखित्वा यः समर्पयेत्।
तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥८॥

इति श्रीनारदपुराणे सङ्कष्टनाशनं नाम गणेशस्तोत्रम् सम्पूर्णम्।

# श्री कृष्णाष्टोत्तरशतनामावलिः

ओं श्रीकृष्णाय नमः
ओं कमलानाथाय नमः
ओं वासुदेवाय नमः
ओं सनातनाय नमः
ओं वसुदेवात्मजाय नमः
ओं पुण्याय नमः
ओं लीलामानुषविग्रहाय नमः
ओं श्रीवत्सकौस्तुभधराय नमः
ओं यशोदावत्सलाय नमः
ओं हरये नमः १०
ओं चतुर्भुजात्तचक्रासिगदाशङ्खाद्यायुधाय नमः
ओं देवकीनन्दनाय नमः
ओं श्रीशाय नमः
ओं नन्दगोप प्रियात्मजाय नमः
ओं यमुनावेगसंहारिणे नमः
ओं बलभद्र प्रियानुजाय नमः
ओं पूतनाजीवितहराय नमः
ओं शकटासुरभञ्जनाय नमः
ओं नन्दव्रजजनानन्दिने नमः
ओं सच्चिदानन्दविग्रहाय नमः २०
ओं नवनीतविलिप्ताङ्गाय नमः
ओं नवनीतनटाय नमः
ओं अनघाय नमः
ओं नवनीतनवाहारिणे नमः
ओं मुचुकुन्दप्रसादकाय नमः
ओं षोडशस्त्रीसहस्रेशाय नमः
ओं त्रिभङ्गिने नमः
ओं मधुराकृतये नमः
ओं शुकवागमृताब्धीन्दवे नमः
ओं गोविन्दाय नमः ३०
ओं योगिनाम्पतये नमः
ओं वत्सवाटचराय नमः
ओं अनन्ताय नमः
ओं धेनुकासुरभञ्जनाय नमः
ओं तृणीकृततृणावर्ताय नमः
ओं यमलार्जुनभञ्जनाय नमः
ओं उत्तालतालभेत्रे नमः
ओं गोपगोपीश्वराय नमः
ओं योगिने नमः
ओं कोटिसूर्यसमप्रभाय नमः ४०
ओं इलापतये नमः
ओं परञ्ज्योतिषे नमः
ओं यादवेन्द्राय नमः
ओं यदूद्वहाय नमः
ओं वनमालिने नमः
ओं पीतवासिने नमः
ओं पारिजातापहारकाय नमः
ओं गोवर्धनाचलोद्धर्त्रे नमः
ओं गोपालाय नमः
ओं सर्वपालकाय नमः ५०
ओं अजाय नमः
ओं निरञ्जनाय नमः
ओं कामजनकाय नमः
ओं कञ्जलोचनाय नमः
ओं मधुघ्ने नमः
ओं मधुरानाथाय नमः
ओं द्वारकानायकाय नमः
ओं बलिने नमः
ओं बृन्दावनान्तसञ्चारिणे नमः
ओं तुलसीदामभूषणाय नमः ६०
ओं स्यमन्तकमणिहर्त्रे नमः
ओं नरनारायणात्मकाय नमः
ओं कुब्जाकृष्णाम्बरधराय नमः
ओं मायिने नमः
ओं परमपुरुषाय नमः
ओं मुष्टिकासुरचाणूरमल्लयुद्धविशारदाय नमः

# श्री कृष्णाष्टोत्तरशतनामावलिः



ओं संसारवैरिणे नमः
ओं कंसारये नमः
ओं मुरारये नमः
ओं नरकान्तकाय नमः ७०
ओं अनादिब्रह्मचारिणे नमः
ओं कृष्णाव्यसनकर्शकाय नमः
ओं शिशुपालशिरच्छेत्रे नमः
ओं दुर्योधनकुलान्तकाय नमः
ओं विदुराक्रूरवरदाय नमः
ओं विश्वरूपप्रदर्शकाय नमः
ओं सत्यवाचे नमः
ओं सत्यसङ्कल्पाय नमः
ओं सत्यभामारताय नमः
ओं जयिने नमः ८०
ओं सुभद्रापूर्वजाय नमः
ओं विष्णवे नमः
ओं भीष्ममुक्तिप्रदायकाय नमः
ओं जगद्गुरवे नमः
ओं जगन्नाथाय नमः
ओं वेणुनादविशारदाय नमः
ओं वृषभासुरविध्वंसिने नमः
ओं बाणासुरकरान्तकाय नमः
ओं युधिष्टिरप्रतिष्ठात्रे नमः
ओं बर्हिबर्हावतंसकाय नमः ९०
ओं पार्थसारथये नमः
ओं अव्यक्ताय नमः
ओं गीतामृतमहोदध्ये नमः
ओं कालीयफणिमाणिक्यरञ्जित श्रीपदाम्बुजाय नमः
ओं दामोदराय नमः
ओं यज्ञभोक्त्रे नमः
ओं दानवेन्द्रविनाशकाय नमः
ओं नारायणाय नमः
ओं परब्रह्मणे नमः
ओं पन्नगाशनवाहनाय नमः १००
ओं जलक्रीडासमासक्तगोपी वस्त्रापहारकाय नमः
ओं पुण्यश्लोकाय नमः
ओं तीर्थपादाय नमः
ओं वेदवेद्याय नमः
ओं दयानिधये नमः
ओं सर्वतीर्थात्मकाय नमः
ओं सर्वग्रहरूपिणे नमः
ओं परात्पराय नमः १०८

इति श्रीकृष्णाष्टोत्तरशतनामावलिः सम्पूर्णम्।



२५.०७.२०२१ दिनाङ्के चातुर्मास्यदीक्षास्वीकर्तृभ्यः श्री श्री श्री पेद्दजीयर्, श्री श्री श्री चिन्नजीयर् स्वामिभ्यः फलसमर्पकाः ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्. जवहर् रेड्डि ऐ.ए.एस्. महाभागाः। तस्मिन् ति.ति.दे. अतिरिक्तकार्यनिर्वहणाधिकारिणः श्री ए.वि.धर्मारेड्डि ऐ.डि.इ.एस्. इत्तरोन्नताधिकारिणश्च भागं गृहीतवन्तः। तत्संदर्भे श्रीनिवासदर्शनं कृतवन्तः उभयजीयर् महाभागाः।



२०२१ जूलै १६ तः २४ पर्यन्तम् तिरुचानूरु श्रीपद्मावतीदेव्याः आलये आचरितकनकाम्बरसहितकोटिमल्लेपुष्पमहायागस्य दृश्यम्। तस्मिन् भागग्राहिणः ति.ति.दे. कार्यनिर्वहणाधिकारिणः डा॥ के.एस्. जवहर् रेड्डि ऐ.ए.एस्. तथा मुख्य सतर्कता - सुरक्षाधिकारिणः श्री गोपीनाथ् जेट्टि ऐ.पि.एस्. महाभागाः।



समीपवर्तिनि काले तिरुमलक्षेत्रे आचरितसुन्दरकाण्डपारायणस्य दृश्यम्।



२५.०७.२०२१ दिनाङ्के अप्पलायगुण्ट श्री प्रसन्नवेङ्कटेश्वरस्वामिनः आलये आचरितपुष्पयागमहोत्सवदृश्यम्। तस्मिन् भागग्राहिणी तिरुपति संयुक्तकार्यनिर्वहणाधिकारीणी श्रीमती सदा भार्गवी ऐ.ए.एस्. महाभागा।





# वैज्ञानिकः कालिदासः

- श्री अभिजित् श्रीकुमार, कालटी, चरवाणी - ९२४९७८२७१७

पुरा कवीनां गणनाप्रसङ्गे।
कनिष्ठिकाधिष्ठितकालिदासः।।

अद्यापि तत्तुल्यकवेरभवात् ''अनामिका सार्थवती बभूव'' इत्युक्तिस्तु सर्वप्रसिद्धा। कालिदासस्य गरिमा च विश्वप्रथिता। कालिदासस्य अलङ्कारप्रयोगनैपुण्यं तथा वर्णनपाटवं च सहृदयान् सदा रञ्जयतीत्यत्र न संशयः। मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम्, रघुवंशम्, कुमारसम्भवम्, ऋतुसंहारम्, मेघसन्देशम्, ज्योतिर्विदाभरणम् इत्यादीनि काव्यानि इदानीं समुपलभ्यन्ते कालिदासमहाकवेः। तेषु ग्रन्थेषु श्लोकसंख्यया न्यूनतमः, अर्थगाम्भीर्येण बृहत्तमश्च ग्रन्थः मेघदूतम्। विषयेऽमुष्मिन् मल्लिनाथसूरिभिः उक्तमेवं- ''मेघे माघे गतं वयः'' इति।

प्रकृतिविज्ञाने कालिदासस्य वैदुष्यं दृष्ट्वा तु इत्थं प्रतिभाति साक्षात् प्रकृतिरेव कालिदासस्य गुरुरिति।

मेघस्य प्रथमे श्लोके ''रामगिर्याश्रमेषु'' इति बहुवचनप्रयोगः कृतः।

नष्टमहिमाद्यष्टैश्वर्यैः कश्चन यक्षः चित्रकूटपर्वते वासं चकार इति श्लोकस्य भावार्थः। इह रामगिर्याश्रमेष्विति बहुवचनप्रयोगः कदाचित् यक्षस्य विभ्रामकावस्थायाः सूचनार्थं स्यात्। विरहेण तप्तः सः एकत्रैव वासं न करोति इतस्ततः भ्रमन् विचरति इत्यादिरूपेण भ्रमितचित्तस्य यक्षस्य अवस्थासूचकः स्यादयं प्रयोगः।

''एकत्रानवस्थानं सूचितमाश्रमेष्विति बहुवचनेन'' इति सञ्जीवन्यां मल्लिनाथश्च। को वा जानाति कालिदासहृदयम्।

उन्मादावस्थायां भ्रमितस्य एकाकिनः यक्षस्य चित्ते अचेतनस्य जीमूतस्य चेतनत्वव्यवहारः स्वाभाविक एव ननु।

''धूमज्योतिस्सलिलमरुतां सन्निपातः क्व मेघः'' (श्लोक-५) इति श्लोके धूमः, ज्योतिः (सूर्यकिरणः), जलम्, वायुः इत्येतेषां संघात एव मेघसृजने करणमिति शास्त्रचिन्तां प्रतिपादयति कालिदासः। आधुनिकैः वैज्ञानिकैः अष्टादश-



न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः।।

एकोनविंशतिशतकयोः अस्य सिद्धान्तस्य निरूपणं कृतं, यथा १७८७ संबत्सरे डेलूक् (Deluc) इति वैज्ञानिकेन। १८०२ तमे लामार्क् (Lamarck) १८०३ तमे होवाई् (Howard) इत्याभ्यां सर्वादौ मेघानां वर्गीकरणं वंशभेदाः च कथिताः इति आधुनिकवैज्ञानिकानां मतम्। यत् कालिदासेन तु ''जातं वंशे भुवनविदिते पुष्करावर्तकानां'' इति श्लोके परामृष्टम्।

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
संदेशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम् ।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसां चोपभुज्य।। १३।।

इत्यत्र यक्षः मेघमुपदिशति - यदा त्वं क्षीणितो भवेः तदा सरांसि उपरि गत्वा आपः उपभुज्यताम् येन तव श्रान्तिर्गच्छति। ततः शीघ्रं यास्यसि इति। यदा यदा मेघगमनं अग्रे सरति तदा तदा वर्षपातेन मेघः श्रान्तिमनुभूयेत। तदनुगुणं बाष्पस्वीकरणेन एव मेघः स्वगतिं आकारञ्च पुनः प्राप्स्यति। तन्निमित्तं जलाशयानाम् उपरि वर्तताम्। सूर्यकिरणैः जलकणाः बाष्पीकृताः सन्तः नभसि आगच्छन्ति। तेषां ग्रहणेन मेघस्य विकासो भवति। जलस्य आकिरणापनयप्रक्रियाभ्यां जीमूतस्य विकासः अपक्षयश्च यथाक्रमं भवतीति बोधयति कालिदासः श्लोकेनानेन।

''अद्रेः शृङ्गं हरति पवनः'' इति अग्रिमे श्लोके कविवचनम्। अद्रेः शृङ्गं प्रति यदा गच्छेत तदा पवनः त्वरितगतिः सन् त्वां शीघ्रं नयतीति यक्षः ब्रवीति।

यदा यदा भूतलादुपरि संसरति तदा पवनस्य गतिरपि तदनु वर्धते इति सिद्धान्तः।

आधुनिकवैज्ञानिकैः महता प्रयत्नेन एतन्निरूपितम्। कालिदासस्य वैज्ञानिकपाटवे किमु वक्तव्यम् इतोऽपि।

स्थित्वा तस्मिन् वनचरवधूभुक्तकुञ्जे मुहूर्तं
तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ।।

वर्षपातेन पुष्पाणां परागणप्रक्रिया त्वरितगत्या संभवति। येन फलागमे अपि संवृद्धिर्भवतीति इह श्लोके तात्पर्यार्थः। रेवानदीतः जलं स्वीकृत्य नदीतटस्थेभ्यो वनप्रदेशेभ्यो दीयताम् इति कविचिनेन अन्तरिक्षशास्त्रसिद्धान्तमेकं निरूप्यते।

तदित्थं नद्याः उपरि जलबाष्पाः अधिकाः भवेयुः। तेन च तत्रत्य अन्तरिक्षमर्द्दः अपि अधिकः एव। यदा जीमूतः एतान् जलबाष्पान् गृह्णाति, तदानीं मर्द्दः न्यूनीभवति। एतद्द्वारा समीपप्रदेशेष्वपि अन्तरिक्षमर्द्दः कुत्रचित् वर्धते, कुत्रचित् न्यूनीभवति। मेघस्य गमनपथि अन्तरिक्षमर्द्दे वैजात्यं यदानुभूयते तदनु वृष्टिपातः भवति।

न केवलं अन्तरिक्षविज्ञाने अपि तु भूविज्ञाने अपि कालिदासः अग्रेसरः इत्यवगम्यते आलकापुरीं प्रति यात्रापथवर्णनेन। तत्र विद्यमानाः नद्यः, अद्रयः, देशाः, तत्रत्याः जननिवासाः, प्रकृतिचारुता इत्यादीनां तथा प्रत्येकस्य प्रदेशस्य सम्यक्तया वर्णनं च मेघदूते द्रष्टुं शक्यते। भारतदेशस्य भूघटनाविषये अपि लब्धहस्तः कालिदासः इत्यत्र न संशयः।

यक्षस्य सन्देशवर्णनायां विरहार्द्रस्य भावनाः प्रणयस्य सौष्ठवञ्च अनितरसाधारणतया श्लोकीकुरुते कालिदासः। मेघदूते एव न, परन्तु इतरेष्वपि काव्येषु कालिदासस्य विज्ञानपटुत्वं नितरां दरीदृश्यते। ऋतुसंहारकाव्ये ऋतुभेदानुसारं मनुजानां जीवने मनोव्यापारेषु च को भेदः आयातीति विषये अनुसन्धानात्मकवर्णनमेव कृतं कविना। आधुनिकाः मनोवैज्ञानिकाः कालिदासस्य वैदग्ध्यमेतत् स्वीयवैज्ञानिकमण्डले अपि अत्यन्तोपकारकमिति अङ्गीकुर्वन्ति। रघुवंशे धर्मशास्त्रस्य गरिमाम् उपन्यसन् कालिदासः कुमारसंभवे हिमालयवर्णनया सहृदयहृदयान् मोदयति। ज्योतिर्विदाभरणम् इत्याख्ये काव्ये कालिदासस्य ज्यौतिषशास्त्रविज्ञानम् अगाधपाण्डित्यं च ज्योतिरिव प्रभासते। श्यामलादण्डके तु तन्त्रशास्त्रसुगन्धः। कालिदासस्य प्रत्येकं श्लोकः महता प्रयत्नेन अवलोकनीयः, तदन्तर्निहितानि तत्त्वानि अवगन्तव्यानि च। जिज्ञासूनां कृते आकाङ्क्षावर्धको अयं लेखो भूयादित्यल्पमतिना मया प्रर्थ्यते।



# हरिदासवाङ्मये श्रीवेङ्कटाचलाधीशः

## (विजयदासकृतिषु)


तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु

संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः

चरवाणी - ९४९४२४८३४८


भगवतः श्रीनिवासस्य प्रियभक्तेषु अन्यतमः श्रीविजयदासवर्यः भृगुवंशसम्भूतः इति आप्तवाक्यप्रमाणेन ज्ञायते।

**मोदलु ऋषिगळु कूडि सत्रयागव**
**नाकनदिय तीरदि रचिसलु।**
**पदुमसंभवनङ्ङ भव बन्दु**
**मुनिवृन्द हृदय संशय हिडिसलु।**
**विधि विष्णुशिवरोळगे उत्तमरतिळियदे**
**मुदड भावन नैदलू**
**ओदगि भृगुमुनि बन्धुसर्वेश वैकुण्ठ सदन**
**नेन्दरुहिदवरो इवरो।।**

'विजयरायर पाद भजिसिदवगनवरत विजय वागुवुदक्के सन्देहवे' - पुरा गङ्गनद्याः तीरे कश्यपादिमुनयः यदा यज्ञं कृतवन्तः तदा नारदमहर्षिः समागत्य मुनिपुङ्गवान् एवम् अपृच्छत्।

भोः मुनिवर्याः! भवन्तः एतत् अपूर्वं यज्ञफलं कस्मै समर्पयिष्यन्ति इति। तदानीं ऋषयः सर्वोत्तमः देवः कः भवति, तस्मै एव यज्ञफलं समर्प्यते इति निश्चितवन्तः। त्रिमूर्तिषु कः सर्वोत्तमः इति ज्ञातुं मुनयः भृगुमहर्षिं प्रेषितवन्तः। भृगुमहर्षिः सत्यलोकं कैलासं च गत्वा तदनु वैकुण्ठं गतवान्। तत्र श्रीमहाविष्णोः वक्षस्थले पादेन भृगुमहर्षिः ताडितवान्। तदनु भगवता विष्णुना भृगुमहर्षिः सत्कृतः। भृगुमहर्षिः पुनः भूलोकम् आगत्य भगवान् श्रीहरिरेव सवोत्तमः इति मुनीन् अवदत्। अतः मुनयः यज्ञफलं भगवते श्रीमहाविष्णवे समर्पितवन्तः। भृगुमहर्षिणा कृतस्य पादताडनकार्यस्य कारणेन लक्ष्मीनारायणयोः मध्ये प्रणयकलहः सञ्जातः। भगवती लक्ष्मीः कोल्हापुरम् आगतवती। भगवान् श्रीमहाविष्णुः वैकुण्ठं त्यक्त्वा वेङ्कटाद्रिम् आगतवान्। श्रीमहाविष्णुः इत्थं वैकुण्ठं त्यक्त्वा वेङ्कटाद्रिम् आगन्तुं प्रधानकारणं भृगुमहर्षिः एव।

अयं भृगुमहर्षिः एव विजयदासवर्यः इति विजयदासवर्यस्य पुत्रस्य मोहनदासस्य वाग्भिः ज्ञायते। भगवान् श्रीकृष्णः 'महर्षीणां भृगुरहम्' इत्यवदत्। भृगुमहर्षिः आदौ पुरंदरदासानां गृहे वत्सरूपेण जनिम् अलभत। तदनु पुरंदरदासेन परिपोषितः। तदनु पुरंदरदासस्य चतुर्थपुत्ररूपेण जन्म सम्प्राप्य पितुः कीर्तनसाहित्यं आजन्म यावत् श्रुतवन्तः। तदनन्तरं पुरंदरदासस्य अनुज्ञया एव भृगुमहर्षिः विजयदासरूपेण जनिम् अलभत। आगर्भदरिद्रः विजयदासः अन्न-उदक-वस्त्र-इत्यादीनाम् अभावेन दुर्भरदारिद्र्यम् अनुभूय काशीनगरं गतवान्। काशीनगरे विजयदासः गङ्गातीरे मणिकर्णिकाघट्टप्रदेशे एकस्मिन् दिने रात्रौ एकाकी उपविश्य ध्यानमग्नः अभवत्। तदा महर्षिः वेदव्यासः पुरंदरदासरूपेण तत्र समगत्य विजयदासं हस्तेन संगृह्य पार्श्वे नीत्वा ''विजयविठल'' इति बीजाक्षराणि जिह्वायाः उपरि लिखितवन्तः। तदनु विजयदासवर्यः अनेकपद्य-सुलादि-कीर्तनानि विरचय्य प्रसिद्धिम् अवाप। विजयदासवर्यः स्वजीवने भारतदेशे विद्यमानानि अनेकपुण्यक्षेत्राणि संदर्श्य तत्तत्क्षेत्रेषु विद्यामानान् देवान् स्वकीर्तनैः वर्णितवन्तः।

प्रधानतया विजयदासवर्यः प्रतिवर्षं तिरुमल-श्रीनिवासपरब्रह्मणः ब्रह्मोत्सवार्थम् आगत्य भगवन्तं वेङ्कटेशं संस्तुत्य स्वामिनः अनुग्रहं प्राप्तवान्। यदा विजयदायवर्यः काशीनगरात् विजयनगरम् आगतवान् तदा श्रीवेङ्कटेश्वरः स्वप्ने समागत्य एवं प्रकारेण आदेशं दतवान्।

**एंदोडनाडुवे संदर्दि बडुवे एंदिगे तर्कैसि सन्तोषपडुवे।**
**उत्साहमंटपदोलगे कुलितु भक्तवत्सलनेंदु नुतिसि कोंबन।।**

(अनुवर्तते)

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - विद्वान् श्रीकान्ताचार्यः
चरवाणी - ६३६०६९३९९०



श्रीमद्भगवद्गीतां वयं गीतामृतमिति कथयामः यतः तत्रस्थं प्रतिपदं प्रतिवाक्यमपि अस्माकं जीवनोपयोगिविषयकमिति। मानवजन्मसार्थकतायै एव उक्तं प्रत्येकमपि वचनम्। तादृशगीतामृतं अत्र ''आचार्योपसदनेन'' प्रारब्धम्। तेन च दुर्योधनः कीदृशं प्रयोजनं प्राप्तवान्? गुरुशिष्ययोः सम्भाषणञ्च कथमासीत्? इति जानीमः।

परमात्मा अखिलाण्डकोटिब्रह्माण्डनायकः श्रीश्रीनिवासः भगवान् अस्माकं पिता चेत् तस्य मुखारविन्दात् निःसृता वागेव अस्माकं माता। सा च अस्मान् ''अर्जुनवत् वर्तन्ताम्, अर्जुनवत् योग्यतां प्राप्नुवन्तु, तथासत्येव समीचीनमुपदेशं प्राप्नुवन्ति, तदाचरन्ति च'' इत्युपदिशति। अतः वयं सर्वेऽपि अर्जुनवत् परिवर्तितुं प्रयतामहे। न तु दुर्योधनवत्। यतोहि दुर्योधनवत् भवामः चेत् किं भवतीति स्वयं भगवद्गीतायां प्रोक्तम्।

तत्र दुर्योधनः स्वगुरुं द्रोणाचार्यं प्रति गत्वा सम्भाषणं कृतवान्। प्रायः वयं सर्वेऽपि बाल्ये पाठितान् गुरून् प्रति गच्छामः चेत् मर्यादया नमांसि अर्पयामः, विनयपरिपूर्णाश्चेत् साष्टाङ्गनमनं कुर्मः। किन्तु दुर्योधनः स्वगुरुं प्रति गत्वा उक्तवान् ...

**पश्यैतां पाण्डुपुत्राणाम् आचार्य महतीं चमूम्।**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता।।** इति।

हे आचार्य! गुरुदेव! पाण्डुपुत्राः बृहत्या सेनया युद्धायावश्यकं व्यूहं च विरच्य अस्मत्पुरतः समागताः। द्रुपदपुत्रः धृष्टद्युम्नः व्यूहस्य नायकत्वं वहति। भवतः शिष्यः, त्वत्सकाशे विद्याभ्यासं कृतवान् धृष्टद्युम्नः महाबुद्धिमान् इति व्यूहदर्शनेनैव अवगम्यते। तथैव भवतः शिष्याः पाण्डवाः अपि तेन साकं तव पुरतः तिष्ठन्ति। प्रतिदिनं कीदृशव्यूहेन आगन्तव्यमिति ज्ञात्वा तादृशव्यूहेनागतान् पाण्डवान् तेषां बृहत्सैन्यमपि पश्य इत्युक्तवान् दुर्योधनः इति सामान्येन वयम् अवगच्छामः।

तत्र दुर्योधनस्यान्तरिकाभिप्रायः कः? इति चेत् तदवगनन्तुं श्लोकस्थं प्रधानं ''आचार्य'' इति पदं द्रष्टव्यम् अस्माभिः। कः आचार्यः? सामान्यतया ''गुरुः'' इति, कुत्रचित् शास्त्रेषु ''उपाध्यायः, आचार्यः'' इत्यपि गुरुं वर्गीकुर्वन्ति। तत्र गुरुः कः? इति चेत् ''माता'' एव प्रथमगुरुः, ततः पिता गुरुः भवति। यतः नैसर्गिकरूपेण भगवद्दत्तः गुरुः पिता, माता च। अतः पितरौ आदिगुरू इति वक्तव्ये नास्ति सन्देहः।

किञ्च विद्याबुद्धिदातारः साज्ज्ञानोपदेशकाः गुरवः बहवः सन्ति। ते सर्वेऽपि आचार्याः चेत् आचार्यपदे एकः स्वरसः विषयः अन्तर्निहितः अस्ति। आचार्येति पदस्य अर्थं एकत्र एवमभिप्रयन्ति शास्त्रकाराः...

**आचिनोति हि शास्त्रार्थान् आचारे स्थापयत्यपि।**
**स्वयमाचरते यस्तु तमाचार्यं प्रचक्षते।।** इति

(अनुवर्तते)



# नामधेयेन किं फलम्

- श्री वि.सुधीरः
चरवाणी - ७८४२१२०६४१

आसीत् पुरा तक्षशिला नाम नगरी। नगर्यां तस्यां कश्चित् विद्वान् आचार्यः अवर्तत। तस्य बहवः शिष्याः। पापकः नाम तेषु एकः अभवत्।

पापकः इति स्वकीयनामधेयं तस्मै नारोचत, यतः तस्य सहाध्यायिनः 'अरे पापक, अरे दुष्ट' इति सततमुक्त्वा तं पीडयन्ति स्म।

एकदाऽतीव पीडितः सः गुरुमागत्य अभाषत, 'आचार्य, मह्यं मम नामधेयं न रोचते, अपरं शोभनार्थाभिधानं यच्छतु भवान् मह्यम्' इति।

त्वमेव देशान्तरं गत्वा किमपि प्रियं नामधेयम् अन्विष्य आगच्छ। तदेव तव नाम प्रसिद्धं भवेत् इति गुरुणा आदिष्टः सः तथेत्युक्त्वा, पाथेयं गृहीत्वा पापकः यात्राम् आरभत। प्रथममेव शवं गृहीत्वा श्मशानं गच्छतः जनान् अवलोक्य 'कोऽयं मृतः'' इति कुतूहलेन अपृच्छत्। ''अस्माकं 'जीवकः' नाम वयस्यः मृतः'' इति तेभ्यः आकर्ण्य विस्मितः सः मनस्यकरोत्, यद्यपि एतस्य नामधेयं 'जीवकः' तथापि एषः मृतः। कथमेतत् संभवेत् इति।

अनन्तरं काचिद् दीना वनिता विलोकिता तेन। सा च निर्जने अरण्ये रोदिति स्म। पापकेन सा पृष्टा। ''का त्वं? किमर्थं रोदिषि?'' तदा सा अकथयत्, ''धनपाली नाम दासी अहम्। वृद्धावस्थायां मम समीपे किञ्चिदपि धनं नास्ति। दरिद्रा अहं कथमन्नं लभेय इति रोदिमि''। अभिधानं तु 'धनपाली', तथापि निर्धना, आश्चार्यं खलु एतत् इति सः व्यमृशत्।

तदनन्तरं सः कञ्चन संभ्रान्तं पुरुषं दृष्टवान्। मार्गात् भ्रष्टः सः स्वमार्गम् अन्विष्यन् इतस्ततः परिभ्रमति स्म। ''कः त्वम्? कुतः परिभ्रम्यते त्वया?'' इति पृष्टे सः अकथयत्'' पथकः इति मम नामधेयम् इदानीं तु अहमेव इष्टमार्गं नावगच्छामि।''

एतस्य नाम तु 'पथकः' स्वयमेव मार्गं न जानाति इति विस्मितः सः प्रत्यागत्य गुरुं प्रणम्य अवदत्, ''आचार्य, मार्गे मया 'जीवकः' मृतः दृष्टः, 'धनपाली' निर्धना अवलोकिता, 'पथकः' च अनभिज्ञातमार्गः दृष्टः। अतः सम्यक् ज्ञातं मया यत् पुरुषः एव गुणवान्, दोषवान् वा भवति, न तस्य नाम्नि कोऽपि गुणः दोषः वा वर्तते। केवलं नामधेयेन किं फलम्?''

**नीतिः** - अतः नामधेयविषयकचिन्तां त्यक्त्वा सद्गुणवर्धापने चिन्तां सारयामः। समाजहितकराः च भवामः।





# देवरथो प्रतिरुद्धः


तेलुगु मूलम् - डॉ.कम्पेल्ल रविचन्द्रन्
संस्कृतानुवादः - डॉ.सुजाता मुनुकुट्ल
चरवाणी - ८१२३७३२२५६
चित्राणि - श्री के.तुलसीप्रसादः


तिरुमलमाडवीथ्यां भक्तजनानां कोलाहलः गोविन्द! गोविन्द!























भारभृत् कथितो योगी योगीशः सर्वकामदः।





























अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

# रसप्रश्नाः

१. दमयन्ते पिता कः?
अ. अर्जुनः आ. भीमः
इ. नकुलः ई. सहदेवः

२. दाक्षीपुत्रः कः?
अ. पाणिनिः आ.पतञ्जलिः
इ. कात्यायनः ई. दीक्षितः

३. गोणिकापुत्रः कः?
अ. पाणिनिः आ.पतञ्जलिः
इ. कात्यायनः ई. दीक्षितः

४. लोपामुद्रा कस्य पत्नी?
अ. विश्वामित्रस्य आ.वसिष्ठस्य
इ. अगस्त्यस्य ई. मनोः

५. एषु उपवायुः कः?
अ. अपानः आ. समानः
इ. व्यानः ई. नागः

६. व्यासस्य माता का?
अ. सत्यवती आ. मधुमती
इ. जाम्बवती ई. भानुमती

७. विभीषणस्य भार्या का?
अ. सरमा आ.पणि
इ. विपाट् ई. शुतुद्री

८. दुर्गासप्तशती कस्मिन् पुराणे वर्तते?
अ. ब्रह्मपुराणे आ.कूर्मपुराणे
इ. मार्कण्डेयपुराणे ई. शिवपुराणे

उत्तराणि - १.आ २.अ ३.आ ४.इ ५.ई ६.अ ७.अ ८.इ

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





Printed by Sri P.Ramaraju, M.A., Special Officer (Press & Publications), T.T.D. Press, Tirupati and Published by Dr. K.Radharamana,M.A., M.Phil., Ph.D., on behalf of Tirumala Tirupati Devasthanams and Publised at Tirupati - 517 501. Editor: Dr.V.G.Chokkalingam, M.A., Ph.D.



धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः।



ओं भूर्भुवः स्वः तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्।।




**SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY**
**Published by Tirumala Tirupati Devasthanams**
**Printing on 20-08-2021**

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम्।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे।।